संगमखेटके। तस्मै हलशतक्षोणीं चतुर्वाटीयुतां ददौ॥१०॥तद्भूरभूदघोन्मर्दी कपर्दी येन कारितम्। चैत्यं युगादिदेवस्य
ग्रामे वटसराभिधे॥ ११ ॥ तत्पुत्र आम्रदेवोऽभूदाम्रवन्मङ्गलास्पदम्। राणुका गेहिनी तस्य पुण्यश्रीरिव देहिनी ॥१२॥
तस्सूनुर्देवचन्द्रोऽभून्निस्तन्द्रो धर्मकर्मणि। पद्मिनी पद्मिनीवास्य प्रिया शीलश्रियो गृहम् ॥१३॥ चत्वारो जज्ञिरे विश्व
नन्दना नन्दनास्तयोः। भव्यजीवमनःशुद्ध्यै धर्मभेदा इवाङ्गिनः ॥१४॥ तेषु ज्येष्ठोऽजनि श्रीमानम्बडः सचिवाग्रणीः।
अद्वितीयो विवेकेन द्वितीयो जह्णस्ततः ॥ १५ ॥ पश्चादाह्लादनो जातिमण्डनं दण्डनायकः। मन्त्री धर्मधुराधुर्यस्तुर्यः
प्रह्लादनः पुनः ॥ १६ ॥ ज्येष्ठे स्वर्गश्रियं प्राप्ते श्रीमदम्बडमन्त्रिणि। विशेषाद्धर्मधुर्यत्वमाह्लादनसुधीर्दधौ ॥ १७ ॥
यत्कीर्तिव्रततिस्थारापद्रस्थानकसंभवा। न्यायधर्मामृतैः सिक्ता विस्तृता विश्वमण्डपे ॥१८॥ यः श्रीसत्यपुरे वीरप्रासादे
नाभिनन्दनम्। थारापद्रे च नाभेयचैत्ये श्रीपार्श्वनायकम् ॥१९॥ तथा चन्द्रप्रभस्वामिसीमन्धरयुगन्धरान्। अम्बिका-
भारतीमूर्तीर्दिग्यस्फूर्तीर्व्यधापयत् ॥ २० ॥ युग्मम् ॥ नाभीपद्मे यथात्मानं योगी ध्यायत्यहर्निशम्। पद्मकोशे तथा
योऽस्मादिनाथं स्वकारितम् ॥ २१ ॥ ग्रामे वटसरे नाम्नि तथा संगमखेटके। येनोद्दध्रे समं पूर्वैश्चैत्यद्वन्द्वं जिनान्वितम्
॥ २२ ॥ अणहिल्लपुरे लक्ष्म्यास्तिलकं प्रेयसां निधिः। स्वगुरोर्वसतिर्येनोद्दध्रे भक्तिशुभात्मना ॥२३॥ लेखयत्यमलज्ञान-
दानभृत्पुस्तकानि यः। अगण्यपुण्यलक्ष्म्याप्त्यै शासनानीव सर्वदा॥२४॥ प्रासादः शुशुभे येनोद्धृतः श्रीवासुपूज्ययुक्।
पत्तनस्य पुरो राज्ञो रत्नवानिव शेखरः ॥ २५ ॥ अमेयं स्पृहयन्श्रेयः श्रीमदाह्लादनो गुरुम्। श्रीवर्धमानसूरिं स भक्त्या-
भ्यर्थितवानिति॥२६॥जीर्णोद्धार इहाणहिल्लनगरे श्रीवासुपूज्यप्रभोः, प्रासादस्य मया भवद्वचनतः स्वश्रेयसे कारितः।

गृहं तपरितस्य पुण्यसदनां कुर्वीत जीर्णोद्धृतिं, कृत्येऽस्मिन्निपुणा यतो गणधराः स्युः सूत्रधारा ध्रुवम् ॥२७॥ ततोऽसौ निधिनिष्कर्मसंख्ये (१२९९) विक्रमवत्सरे । आचार्यश्चरितं चक्रे वासुपूज्यविभोरिदम् ॥२८॥ चतुरा वाचयन्त्वेतच्छ्रद्धा व्याख्यां नयन्त्वपि । शब्दप्रमाणसाहित्यागमज्ञाः शोधयन्तु च ॥२९॥ यावत्पूर्वाङ्गणेऽस्मिन्नसमतमतमोगोमयालेपनार्द्रे, मार्गसंध्यानुरुन्धी स्फुरदुडुकुसुमे मुञ्चतीन्दुप्रदीपम् । प्रातःश्रीः सांध्यरागप्रसृमरघुसृणे भानुकुम्भं च तुष्ट्यै, धर्माधीशस्य तावज्जिनचरितमिदं मर्त्यलोके मुदे स्तात् ॥३०॥ सर्वाक्षरगणनायां जयति श्रीवासुपूज्यचरितमिदम् । वेदनिधिवेदबाणा [५४९४] नीताङ्कग्रन्थसंपूर्णम् ॥३१॥

॥ इति श्रीवासुपूज्यचरित्रं समाप्तम् ॥



